।।ॐ श्रीगणेशाय नमः।।

# तर्कसंग्रहः

## (वटुकतोषणीटिप्पणसंग्रहः)

टिप्पणसंग्रहकर्ता
स्वामी शान्तिधर्मानन्द सरस्वती

सत्यं साधना कुटीर
वार्ड नं 3, डाकः कैलास गेट, मुनि की रेती, ऋषीकेश,
तहः नरेन्द्रनगर, जिलाः टिहरी गढ़वाल, उत्तराखण्ड 249137.
चल दूरभाष् : 9557130251, www.satyamsadhana.org

| | स्वा. शान्तिधर्मानन्द सरस्वतीजी के डी वि डी | मूल्य |
|---|---|---|
| 1 | लघुसिद्धान्तकौमुदी, अर्थसंग्रह, सांख्यकारिका, तर्कसंग्रह | 25 |
| 2 | वेदान्तपरिभाषा, योगसूत्र, मानमेयोदय, मानमनोहर, तर्कभाषा, शिवसूत्र | 25 |
| 3 | ब्रह्मसूत्रं, 1 भगवद्गीता 1-8 | 25 |
| 4 | 1 भगवद्गीता 9-10, 1 ईश से छान्दोग्य 1-5 | 25 |
| 5 | 1 छान्दोग्य 6-8, बृहदारण्यक, 2 भगवद्गीता 1-6 | 25 |
| 6 | 2 भगवद्गीता 7-18, 2 ईश से मुण्डक तक | 25 |
| 7 | 2 माण्डूक्य से ऐतरेय तक व अंग्रेजी में छान्दोग्य से बृहदारण्यक 1-5 तक, श्वेताश्वतरोपनिषद् | 25 |
| 8 | श्रीमद्भागवतम् 1-23 | 25 |
| 9 | श्रीमद्भागवतम् 24-34, भागवतकथायें - शान्तिधर्मानन्दजी, ठाकुरजी, काशिकानन्दजी, रामानंदजी व विश्वात्मानंदजी | 25 |
| 10 | भागवतकथा-पराशरजी, पंचदशी, सिद्धान्तबिन्दु व शिवदृष्टिः 1-7, वेदान्तसारः | 25 |
| 11 | शिवदृष्टिः 8, प्रवचनसंग्रहः, उपदेशसाहस्री, त्रिपुरोप-निषद्, षड्दर्शनसूत्रपाठः, सिद्धान्त कौमुदी 1-4 | 25 |
| 12 | सिद्धान्त कौमुदी 5-10, चित्सुखी 1-4, न्यायसिद्धान्तमुक्तावली 1-2, व्याकरण महाभाष्यं 1-6 | 25 |
| 13 | चित्सुखी 5-13, अद्वैतसिद्धि 1-12 | 25 |
| 14 | बालबोधज्योतिषसारसमुच्चयः, मानसागरी | 25 |

।।ॐ श्रीगणेशाय नमः।।

# तर्कसंग्रहः

## (वटुकतोषणीटिप्पणसंग्रहः)

टिप्पणसंग्रहकर्ता

स्वामी शान्तिधर्मानन्द सरस्वती

सत्यं साधना कुटीर

वार्ड नं 3, डाकः कैलास गेट, मुनि की रेती, ऋषीकेश,

तहः नरेन्द्रनगर, जिलाः टिहरी गढ़वाल, उत्तराखण्ड 249137.

चल दूरभाष् : 9557130251, www.satyamsadhana.org

# तर्कसंग्रहः-

## अथ उदेद्शप्रकरणम्

1. अथ ग्रन्थोऽयं न्यायवैशेषिकदर्शनयोः समुच्चयात्मको भवति। कथं? न्यायदर्शने षोडश पदार्थाः चत्वारि प्रमाणनि सन्ति, वैशेषिके तु सप्तपदार्थाः द्वे प्रमाणे च। अस्मिन् ग्रन्थे सप्तपदार्थाः (नैयायिकानां षोडशपदार्थानां सप्तस्वेवान्तर्भूय),चत्वारि प्रमाणानि (वैशेषिकानां द्वे प्रमाणे सहिते)। तस्मात् न्याय - वैशेषिकोभयदर्शनयोः प्रवेशे उपयोगि। तर्कभाषा - केवल न्यायस्यारम्भिको ग्रन्थः, मानमनोहरस्तु - केवलवैशेषिकस्यारम्भिको ग्रन्थः।।

2. मंगं=शुभं लातीति मंगलं तदनुकूलं आचरणं मंगलाचरणं।
तच्च त्रिविधं-नमस्कारात्मकं, वस्तुनिर्देशात्मकं, आशीर्वादात्मकञ्चेति।
समाप्तिकामो मंगलमाचरेत्-प्राचीन नैयायिकाः,
विघ्नध्वंसकामो मंगलाचरेत्-नव्यनैयायिकाः।

3. विपूर्वो धा करोत्यर्थेऽभिपूर्वस्तु भाषणे।
मेलने संपूर्वश्चापि निपूर्वः स्थापने मतः।।
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते।
तमेव विशिनष्ट्यन्यदुपसर्गगतिस्त्रिधा।।

4. विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः।।

5. नीयते परमात्मानं प्राप्यते येन स न्यायः। प्रमाणैरर्थपरीक्षाकरणं वा न्यायः।
नि+इ+घञ् = न्यायः। इण् गतौ। अथवा नीञ् प्रापणे धातुपूर्वक इण् गतौ।

6. संबंधश्चाधिकारी च विषयश्च प्रयोजनम्।
विनाऽनुबन्धं ग्रन्थादौ मंगलं नैव शस्यते।।
ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानानुकूलविषयत्वं अनुबन्धत्वं।।

7. परं = निरतिशयत्वे सति क्षयशून्यत्वं। महः = पूज्यः।

8. चिकीर्षितस्य=कृतिसाध्यत्वप्रकारिकेच्छा चिकीर्षा, तद्विषयीभूतस्य ग्रन्थस्य।

8A. प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते।

9. लक्षणस्य लक्षणं = लक्ष्यतावच्छेदकभिन्नत्वे सति व्यावृत्ति (पदार्थेतरभेद) भिन्नत्वे सति लक्ष्यतावच्छेदकसमनियतत्वे सति धर्मत्वं।।

10. अन्त:करणपरिणामविशेषो उदेद्श:।

11. प्रमाणशून्यानन्ताभिनवपदार्थकल्पना अनवस्था।

12. पदजन्यप्रतीतिविषयत्वं पदार्थत्वं। द्रव्यादिभेदसप्तकाभाववत्त्वं पदार्थत्वं। कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वं। यस्याभाव: स प्रतियोगि।

13. शक्ते: सप्तपदार्थेषु कथं नान्तर्भाव:?
न द्रव्ये-गुणकर्मणो: सत्त्वात्; न गुणे-गुणे गुणानङ्गीकारात्, न कर्मणि-गुणकर्मवृत्तिकत्वात्, न सामान्यविशेषसमवायेषु-अनित्यत्वात्, न प्रागभावे-सादित्वात्, न प्रध्वंसाभावे-सान्तत्वात्, नात्यन्ताभावान्योन्याभावयो: - अनित्यत्वात्।। क्रियायां क्रिया गुणे गुणो न भवति अमूर्तत्वात्।

14. पदकृत्ये द्रव्यलक्षणेषु प्रथमलक्षणं-लक्षणलक्ष्यतावच्छेदकयोरभिन्नत्वादसंभव:, द्वितीयलक्षणेऽव्याप्ति: - उत्पन्नक्षणावच्छिन्नं द्रव्यं निर्गुणं निष्क्रियञ्च तिष्ठतीति न्यायात्। तस्मात् तृतीयलक्षणं कृतं।।

15. एकतरपक्षपातिनी युक्तिर्विनिगमना।

16. द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणस्य लक्षणं।

## अथ लक्षणप्रकरणम्

17. लक्ष्यतावच्छेदकत्वे सतीतरव्यावर्तकत्वं स्वरूपलक्षणं।
लक्ष्यतावच्छेदकभिन्नत्वे सतीतरव्यावर्तकत्वं तटस्थलक्षणं।

18. जालसूर्यमरीचिस्थं सूक्ष्मं दृश्यते यद्रज:।
तस्य षष्ठीतमो भाग: परमाणु: स उच्यते।।

19. सुखदु:खान्यतरसाक्षात्कारत्वं भोगत्वं।

19*A*. हिताहितप्राप्तिपरिहारानुकूलव्यापारो चेष्टा।

19*B*. द्रव्यान्तरानारम्भकद्रव्यत्वमन्त्यावयवित्वम्।

20. समवायेन गन्धसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पृथिव्या: लक्षणम्। एवं जलादेरपि।

21. विद्यमानत्वे सतीतरव्यावर्तकत्वे सति कार्यान्वयित्वं विशेषणं। तेन व्यावृत्तो विशेष्य:।

22. ईश्वर: कारणं पुरुषकर्मसाफल्यदर्शनात् स्वामीभृत्यवत्।

23. उप समीपवर्तिनि पदार्थे स्वधर्मान् आधीयते य: स उपाधि:।

24. कालो देशस्प्रागभाव ईश्वरेच्छाज्ञानयत्ना:।
प्रतिबन्धकाभावश्चादृष्टश्चेति साधारणा:।।

25. शरीरकृत:, सम्बन्धकृत:, उपस्थितिकृतश्च गौरवालाघवविचारो सर्वत्र क्रियते। तत्रापि फलमुखगौरवस्यादोषत्वं, पर्यायवाचकानां प्रयोगे गौरवलाघवो नाद्रियते-इति च स्वीकृतम्।।

25a. द्रव्यान्तरानारम्भकद्रव्यत्वं अन्त्यावयवित्वं।

26. प्रारब्धक्रियापरिसमाप्तिकव्याप्तिकालत्वं=वर्तमानत्वं।
स्मर्तव्यप्रत्यस्तमितक्रियाविशिष्टकालत्वं=अतीतत्वं=भूतत्वं।
अनारब्धत्वे सति सम्भावितक्रियाविशिष्टकालत्वं=भविष्यत्त्वं।

27. ग्राह्यत्वं- जन्यप्रत्यक्षज्ञानविषयत्वं।

28. रूपादिचतुष्टयपरिवर्तनप्रक्रियाया विचारे द्वैविध्यं मतं-पीलुपाकवादिनो वैशेषिका:, पीठरपाकवादिनश्च नैयायिका:। वस्तुन आपरमाण्वन्तभङ्गे सति विजातीयतेज:संयोगात् कारणगतपूर्वरूपादिचतुष्टयनाशे तदनन्तरं कार्यानुकूलरूपादिचतुष्टयजनका: तेज:संयोगा: परमाणुषु जायन्ते, तदुत्तरं कार्यानुकूलरूपादिचतुष्टयविशिष्टपरमाणुभि: द्वयणुकादिक्रमेण कार्योत्पत्तिरेव पीलुपाकवाद इति वैशेषिकानाम् मतं। परमाणुपर्यन्तनाशं विना अवयविन्येव कारणगतरूपादि चतुष्टयनाशका: विलक्षणतेज:संयोगा: जायन्ते यै: कारणगतरूपादिचतुष्टयनाशे सति कार्यानुकूलरूपादिचतुष्टयोत्पादका: विलक्षणतेज:संयोगा अवयविन्येव जायन्ते तै: कार्यानुकूलरूपादिचतुष्टय-मुत्पद्यन्ते। इत्थं अवयविन्येव रूपादिचतुष्टयपरावर्तनप्रक्रियां पीठरपाकवाद इति नैयायिका मन्यन्ते।।

29. गुणा: द्विविधा:-व्याप्यवृत्तिका, अव्याव्यवृत्तिकाश्चेति। प्रथमो रूपादय:, द्वितीयश्च संयोगशब्दादय:।

30. गुरुत्वस्यन्दनत्वलक्षणे आद्यत्वं - स्व = पतनोत्पत्ति: (स्यन्दनोत्पत्तिर्वा) - समानाधिकरणपतनध्वंस (स्पन्दनध्वंसो वा) असमानकालिकत्वं।

31. स्नेहो द्विविध:-घनीभूतोऽघनीभूतश्चेति। घनीभूतस्तु दहनानुकूल: तैलादौ, अघनीभूतश्च दहनप्रतिकूल: जलादौ।

32. वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा दशदिक्षूत्तरोत्तरशब्दोत्पत्तिस्तत्तत्पूर्व नाशश्च सुन्दोपसुन्दन्यायेनान्त्योपान्त्ययो: परस्परनाश:।

# अथ प्रत्यक्षखण्डः-

33. ज्ञानं=विषयी, तस्मिन् विषयिता भवति, सा च त्रिधा बोध्यते-विशेष्यता प्रकारता संसर्गता चेति। विस्तरस्तु 38 दृष्टव्य।

34. अर्थं बुद्ध्वा वाक्यरचना इति नियमः।

35. कार्यकारणे (अवयवावयविनौ), गुणगुणिनौ, क्रिया-क्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ययोः - अयुतसिद्धम्, एष्वेव समवायसम्बन्धो भवति।

36. व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः।।

37. नानामुख्यविशेष्यशालिज्ञानं समूहालम्बनं।

38. ज्ञानं=विषयी, तस्मिन् विषयिता भवति, सा च विषयनिरूपिता भवति। विषयाश्च घटादयः तेषु विषयता भवति, सा च त्रिधा बोध्यते-विशेष्यता, प्रकारता, संसर्गता चेति। कथमिति चेत् श्रूयताम् तावत्-ज्ञानं निरूपकं, विषयश्च निरूप्यः। निरूप्यनिरूपकयोः परस्परसंबंधो भवति। स च ईदृक्-
ज्ञानं- विषयि, तस्मिन् विषयिता भवति।
घटादयः- विषयः, तस्मिन् विषयता भवति।
ज्ञानं घटादौ वर्तते घटादयश्च ज्ञाने वर्तन्ते। प्रथमपक्षे विषयिता त्रिधा बोध्यते द्वितीयपक्षे विषयता त्रिधा बोध्यते। यतोहि नैयायिकाः मन्यन्ते प्रथमान्तार्थमुख्यविशेष्यताशालि ज्ञानं शाब्दबोधो भवतीति।

39.



40.




41.




42 ज्ञानं -कार्यम्

तत्तद्विषयवृत्ति ↕ लौकिकविषयतासंबंधः

सन्निकर्षः कारणं

अतः ज्ञानात्मककार्यं प्रति तत्तद्विषयवृत्तिलौकिकविषयतासंबंधेन तत्तत्सन्निकर्षः कारणं भवति।।

43. घटाभावः=इत्यत्र प्रतियोगिता संसर्गविधया भासते, घटविशिष्टाभावः=इत्यत्र प्रतियोगिता प्रकारविधया भासते।

44. घटाभाववद् भूतलम्-इत्यत्र भूतलं विशेष्यं, घटाभावो (मत्वर्थीयप्रत्ययस्य प्रकृति:) विशेषणम्, अत: संयुक्तविशेषणतासन्निकर्षोऽवसेय: किन्तु भूतले घटाभाव:-इत्यत्र भूतलं विशेषणं, घटाभावो विशेष्य:, अत: संयुक्त-विशेष्यतासन्निकर्षोऽवसेय:।।

45. इन्द्रियं करणं प्रत्यक्षप्रमाणं, सन्निकर्षो व्यापार:, प्रत्यक्षज्ञानं = कार्यं = फलं।

## अथानुमानखण्ड:-

1. पूर्वोत्तरभागयोर्ग्रन्थयो: संबंध: संगति:।।

सप्रसङ्ग उपोद्घतो हेतुताऽवसरस्तथा। निर्वाहकैककार्यत्वे षोढ़ा संगतिरिष्यते।।

1. स्मरणप्रयोजकसम्बन्धत्वं सप्रसङ्गत्वं। स्मृतस्योपेक्षाऽनर्हत्वं वा।
2. प्रकृतावबोधकत्वमुपोद्घातत्वं।
3. अजहत्स्वार्थलक्षणया कार्यकारणभावोपजीव्योपजीवकभावो वा हेतुता।
4. प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्यनन्तरवक्तव्यत्वं अवसरत्वं।
5. एकप्रयोजकप्रयोज्यत्वं निर्वाहकैक्यं।
6. एककार्यानुकूलत्वं कार्यैक्यत्वं।।

2. समानाधिकरणप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावोऽस्तीति गदाधरभट्टाचार्य:, नास्तीति जगदीशतर्कालङ्कार:।

3. तादात्म्यसंबंधावच्छिन्नपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपित साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठविधेयता-कानुमितित्वावच्छिन्नानुमितिनिष्ठकार्यतां प्रति साध्यतावच्छेदकसंबंधवच्छिन्न-साध्ययतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितविषयतासंबंधाच्छिन्न व्याप्तित्वावच्छिन्नव्याप्तिनिष्ठप्रकारतानिरूपिता या हेतुतावच्छेदकसंबंधावच्छिन्न हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठप्रकारतानिरूपित तादात्म्यसंबंधावच्छिन्न-पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यताशालि परामर्शज्ञानं कारणं इति जागदीशमते अनुमितिपरामर्शयो: कार्यकारणभाव:। पूर्वोक्तकार्यतां प्रति साध्यतावच्छेदक-संबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितविशेष्यत्वाव-च्छिन्नविषयतासंबंधावच्छिन्नव्याप्तित्वावच्छिन्नव्याप्तिनिष्ठप्रकारतानिरूपित-विशेष्यत्वावच्छिन्नाभेदसंबंधावच्छिनाश्रयत्वावच्छिन्नश्रयनिष्ठप्रकारतानिरूपित विशेष्यत्वावच्छिन्नहेतुतावच्छेदकसंबंधावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठ

प्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभेदसंबंधावच्छिन्नाश्रयत्वावच्छिन्नाश्रयनिष्ठ प्रकारतानिरूपिततादात्म्यसंबंधावच्छिन्नपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठ विशेष्यताशालिपरामर्शज्ञानं कारणमिति गादाधरीयमतेऽनुमितिपरामर्शयोः - कार्यकारणभावः।।

4. हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं हेत्वधिकरणवृत्ति-भेदप्रतियोगितावच्छेदकधर्मवत्वं वा व्यापकत्वं।

5. साध्याभाववद्वृत्तित्वं-इत्यस्य विवरणं साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यता-वच्छेदकेतरधर्मानवच्छिन्नसाध्यतावच्छेदकावच्छिन्न साध्यनिष्ठप्रतियोगिताक प्रतियोगितावच्छेदकसंबंधवच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न वैयधिकरण्या-वच्छिन्नाभावाधिकरणं* यत्तन्निरूपित हेतुतावाच्छेदकसंबंधावच्छिन्नवृत्तितावच्छेद-केतरधर्मानवच्छिन्न वृत्तितावच्छेदकावच्छिन्न प्रतियोगिताकाभावो व्याप्तिः।।

* इत्यस्य स्थाने- प्रतियोग्यनधिकरणं यत्साध्याभावाधिकरणं तन्निरूपित...।

6. साध्याभाववद्वृत्तित्वं व्यभिचारः, साध्यवदवृत्तित्वं वा।।

7. द्रव्यत्वे सति सजातीयद्रव्यान्तरानारम्भकत्वमवयवित्वं घटादौ, न तु पञ्चावयवात्मकन्याये। अत्र पंचवाक्यात्मकसमुदायोऽवयवी, अत एव प्रतिज्ञाद्यान्यतमवाक्यत्वमवयवोऽत्र ग्राह्यः, न तु अवयविन द्रव्यस्य समवायिकारण-त्वमवयवत्वं यत्कपालादौ प्रसिद्धम्।

8. प्रयोज्यः= कार्यः, प्रयोजकः= कारणं। अतः पंचावयवात्मकन्यायः कारणं प्रयोजकः, तत्प्रयोज्यः= कार्यं परार्थानुमानम्।

## अथ उपमान खण्डः

1. **बहुवादीसम्मतन्यायः**- बुहुभिः वादिभिः सम्मतः स्वीकृतपदार्थः प्रथमं विचार्य तदनन्तरं अन्यैरस्वीकृतपदार्थस्य प्रतिज्ञापूर्वकं साधनीय इति एष न्यायस्यार्थः। एतन्यायेन प्रथमं शब्दखण्डमेव विचारणीयं न तूपमानं। यतो हि एकं चार्वाका (प्रत्यक्षं), द्वौ काणादबौद्धौ अनुमानमपि। त्रीणि शब्दमपीति सांख्ययोगिनौ। ततः नैयायिकाः ये उपमानं स्वीकुर्वन्ति।

2. उक्तन्यायं बाध्य उपमानमेव प्रथमं विचारितं। कथं? **सूचीकटाहन्यायेन**। यथा लौहकारः सूचीकटाहयोरुभयोः कार्ययोः कर्तुं प्राप्तं, तत्रापि कटाहनिर्माणं पूर्वं प्राप्तं ततः सूची। तथापि सूचीमेव प्रथमं निर्माति, कथं? यतोऽल्पकाले एव कर्तुं शक्यते धनमपि तत्काल एव प्राप्नोति, कटाहनिर्माणे बहुकालं फलञ्च

धनमपि विलम्बेन तस्मादेव कारणाद्विलम्बेन प्राप्नोति। एवमेव शब्द खण्डे विस्तृत विचारो भवति तदपेक्षया उपमानखण्डेऽल्पविचार इति मत्वा प्रथममुपमानं निरूप्य शब्दं निरूपितं।।

## अथ शब्दखण्डः

1. विषयतासंबंधेन शक्तिविशिष्टत्वं शक्यत्वं।

   निरूपकतासंबंधेन शक्तिविशिष्टत्वं शक्तत्वं। अर्थस्मृत्यनुकूलपदार्थयोः संबंधः शक्तिः, सा तु ईश्वरेच्छैव प्राचीनमते, इच्छामात्रं नव्यमते।

   ईश्वरेच्छाविषयः इच्छासामान्यस्य वा विषयः किं भवति? अस्मात्पदादयमर्थो बोद्धव्य इत्येव। स पुनः अर्थविशेष्यकपदजन्यज्ञानविषयत्वप्रकारकः।

1a. तद्घटितत्वं=तद्विषयकप्रतीतिविषयत्वम्। घटकत्वं= अवयवत्वं = ज्ञानविषयत्वम्।

2. प्रथमान्तार्थमुख्यविशेष्यशालिज्ञानं शाब्दबोधः इति नैयायिकाः।

## अथावशिष्टगुणप्रकरणम्

1. यथार्थज्ञानं प्रति संशयः सहयोगी अल्पबाधको वा, विपर्ययस्तु महाबाधकोऽत्यन्त विरोधित्वात्। यदा स्वस्यायथार्थज्ञाने दुराग्रहपूर्वाग्रहो वा भवति तदा द्वयोरपि महाबाधकौ एव।

2. तर्कः त्रिविधः सुतर्कः, वितर्कः, कुतर्कश्चेति। तत्र यथार्थज्ञाने सुतर्कवितर्कौ सहयोगी कुतर्कस्तु महाबाधक एव। यदा सिद्धान्तविपरीतः संशयः पूर्वाग्रहो दुराग्रहो वा स्यात्तदा कार्यकारणभावादिविघटनसंभावनां दर्शयित्वा पूर्वपक्षोत्थापित-दोषनिवारणं तर्कस्य फलं।

2a. आरोपः = आहार्यज्ञानं = बाधकालीनेच्छाजन्यं ज्ञानं।

3. फलेच्छा उपयेच्छां प्रति कारणं भवति। एवमेव फलगतद्वेषः उपाय तत्साधनगतद्वेषं प्रति कारणं भवति। उपायः फलस्य साधनानि।। प्रथमे फलं सुखं, उपायाः-भोजनशयनादिः। द्वितीये फलं दुःखं, उपायाः कण्टकसर्पापमानादिः।।

4. विशेषणज्ञानं विशिष्टबुद्धिं प्रति कारणं भवति।

   ध्वंसं प्रति प्रतियोगिनः कारणं भवति।

5. स्वस्य स्वयमेव जनको न भवति।

# अथ कर्मादिप्रकरणम्:-

1. कर्मणो विभागकरणं शिष्यबुद्धिवैशद्यायैव। गमनात्मकत्वात्। यतो हि सर्वेषु उत्तरोत्तरदेशसंयोगपूर्वकपूर्वपूर्वदेशविभागानुकूलक्रियात्मकं गमनसामान्यलक्षणं भवत्येव। ऊर्ध्वाध:प्रसारणाकुञ्चनानि दिगुपाधिका एव।
2. परमाण्वोर्मध्ये विशेषनामकपदार्थोऽस्ति। स च तत्र केनचिदपि संबंधेन भवति चेत् स समवायसंबंध एव। किन्तु अनन्तपरमाणूनां मध्ये विद्यमाना: अनन्ता विशेषा: सत्त्वेऽपि विशेषेषु जातिर्नास्ति। कथं, विशेषा: स्वयं व्यावर्तकात्मकत्वात्। जातिरपि वस्तूनां व्यावर्तनं करोति। अत एव विशेषे जातिश्चेत् विशेषत्वं, तत: विशेषस्य रूपहानि: (विशेषपदार्थस्य यत् स्वरूपं व्यावर्तनात्मकं तस्य हानि:)स्यात्। तस्मात् विशेषेषु जातिर्नास्ति।
3. दृग्दश्यसंयोगो हेयहेतु:। हेयं दु:खं, तस्य हेतु: द्रष्टृदृश्ययो: संयोग एव। संयोगश्च संबंधविशेष:। सम्बन्धश्च विशिष्टप्रतीतिनियामकत्वं। एकस्मिन् पदार्थेऽन्य-पदार्थस्य यद्वैशिष्ट्यं प्रतीयते तस्य नियामक: संबंधो भवति। अत: नियामकत्वं अर्थात् वैशिष्ट्यप्रतीतिनियामकत्वं संबंधस्य लक्षणं भवति। तच्च सदा द्विष्ठ एव।।
4. तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं सादृश्यत्वं।
5. तद्भिन्नत्वे सति तदभिन्नसत्ताकत्वं तादात्म्यं।

।। इत्यों शम्।।

# पूर्वपक्षव्याप्तिः न्यायबोधिन्यनुसारेण

साध्याभाववदवृत्तित्वमित्यस्य पूर्वपक्षव्याप्तेर्लक्षणस्य साध्याभावाधिकरणनिरूपित-वृत्तित्वाभावोऽर्थः।

साध्याभाववदवृत्तित्वं - इसका अर्थ है - साध्याभावाधिकरण-निरूपितवृत्तित्वाभावत्वं।

इदं लक्षणं सद्धेतौ समन्वेति चेत् तर्हि सम्यग्भवति, न गच्छति चेत् तर्ह्यव्याप्तिदोषग्रस्तं भवति। तथेदं लक्षणमसद्धेतौ न समन्वेति चेत् तर्हि सम्यग्भवति, गच्छति चेत् तर्ह्यतिव्याप्तिदोषग्रस्तं भवति।

यह लक्षण यदि सद्धेतु में घटता है तो ठीक है, नहिं तो लक्षण अव्याप्ति दोष से ग्रस्त माना जायेगा और यदि असद्धेतु में लक्षण नहिं घटता है तो ठीक है, अगर घटता है तो लक्षण अतिव्याप्ति दोष से ग्रस्त माना जायेगा।

व्यभिचाराभाववत्त्वं सद्धेतुत्वं। व्यभिचारवत्वं चासद्धेतुत्वं। व्यभिचारस्य लक्षणं तु साध्याभाववद्वृत्तित्वं साध्यवदवृत्तित्वं वा। पर्वतो वह्निमान् धूमादित्यस्मिन् प्रसिद्धसद्धेतुस्थले द्रष्टव्यः कथमयं सद्धेतुरिति ? साध्यो वह्निः, साध्याभावो वह्न्यभावः, साध्याभाववद् जलह्रदादि, तन्निरूपितवृत्तित्वं मीनादौ वर्तते, न तु धूमे। अतो धूमहेतुः सद्धेतुः। एवमेव प्रसिद्धासद्धेतुस्थले पर्वतो धूमवान् वह्नेरित्यत्र द्रष्टव्यः। कथमयमसद्धेतुरिति ? साध्यो धूमः, साध्याभावो धूमाभावः, साध्याभाववदयोगोलकं, तन्निरूपितवृत्तित्वमेव वह्नौ वर्तते। यतोहि व्यभिचारलक्षणं वह्नौ समन्वितं तस्माद्वह्निरसद्धेतुर्भवति।

व्यभिचाराभाववाला हेतु सद्धेतु होता है और व्यभिचारवाला हेतु असद्धेतु होता है। साध्याभाववद्वृत्तित्व व्यभिचार है अथवा साध्यवदवृत्तित्व। प्रसिद्धसद्धेतुस्थल पर्वतो वह्निमान् धूमात् में घटाके देखों की यह धूम हेतु सद्धेतु कैसे सिद्ध होता है।

साध्य है वह्नि, साध्याभाव = वह्न्यभाव, साध्याभाववद्=जलह्रदादि, तन्निरूपित वृत्तित्व मीनादि में है और अत एव अवृत्तित्व धूम में। इस प्रकार व्यभिचार का लक्षण धूम में नहीं घटता, अतः धूम सद्धेतु है। इसी प्रकार प्रसिद्ध असद्धेतु स्थल पर्वतो धूमवान् वह्नेः में लक्षण घटाके देखें- साध्य = धूमः, साध्याभाव = धूमाभाव, साध्याभाववद्=तप्तअयोगोलक, तन्निरूपित वृत्तित्व वह्नि हेतु में है। अतः व्यभिचार का लक्षण घटने से यह हेतु असद्धेतु है।

सेयं पूर्वपक्षव्याप्तिः सद्धेतौ गमनीयमसद्धेतौ च न गमनीयं। इयमेव व्याप्तिलक्षणस्य परीक्षा। सा चेत्थम् पर्वतो वह्निमान् धूमादिति सद्धेतुस्थले साध्यो वह्निः, साध्याभावो वह्न्यभावः, साध्याभाववद् जलह्रदादिः, तन्निरूपितवृत्तित्वं मीनादौ वर्तते, अवृत्तित्वं च धूमे इति कृत्वा लक्षणस्य समन्वयो भवति। अत एव सद्धेतौ लक्षणस्याव्याप्तिर्न भवति। एवं पर्वतो धूमवान् वह्नेरित्यसद्धेतुस्थले साध्यो धूमः, साध्याभावो धूमाभावो, साध्याभाववदयोगोलकं, तन्निरूपितवृत्तित्वमेव वह्नौ वर्तते, नत्ववृत्तित्वमिति लक्षणस्य तत्राविद्यमानत्वादसद्धेतौ लक्षणस्यातिव्यप्तिर्न भवति।

वह यह पूर्वपक्षव्याप्ति का लक्षण सद्धेतु में जाना चाहिये और असद्धेतु में नहीं जाना चाहिये। यही व्याप्ति के लक्षण की परीक्षा है। वह इस प्रकार है। जैसे – पर्वतो वह्निमान् धूमात् – यह सद्धेतु स्थल है क्योंकि हेतु व्यभिचार दोष से रहित है। यत्र यत्र धूमः तत्र तत्र वह्निः यह व्याप्ति है। इस व्याप्ति में साध्याभाव-वद्वृत्तित्वरूपी व्यभिचार दोष नहीं है। क्योंकि साध्य है वह्नि, साध्याभाव हुआ वह्न्यभाव, साध्याभाववद् वह्न्यभाववद् हुआ जलह्रदादि, तन्निरूपित वृत्तित्व मीनादि में है, धूम में नहीं है अर्थात् धूम में अवृत्तित्व है। अतः व्यभिचार दोष नहीं है अपितु लक्षण सद्धेतु स्थल में समन्वय हो गया। असद्धेतु स्थल में यह लक्षण नहीं जायेगा। कैसे? पर्वतो धूमवान् वह्नेः – यह असद्धेतु स्थल है। यत्र यत्र वह्निः तत्र तत्र धूमः यह व्याप्ति होगी, इसमें व्यभिचार दोष है। क्योंकि साध्य है धूम, साध्याभाव हुआ धूमाभाव, साध्याभाववद् धूमाभाववद् हुआ अयोगोलक, तन्निरूपित वृत्तित्व ही वह्नि में है, अवृत्तित्व नहीं है। अतः वह्निरूपी हेतु में व्यभिचार का लक्षण घटने से यह असद्धेतु है और व्याप्ति का लक्षण न घटने से व्याप्ति का लक्षण सर्व दोष से रहित है अर्थात् सम्यक् है।

1. नन्वेवं सत्यपि व्याप्तिलक्षणस्य साध्याभावशरीरे संबंधविशेषग्राहक-विशेषणानिवेशेन येन केनापि संबंधेन साध्याभावमादाय पर्वतो वह्निमान् धूमादिति सद्धेतुस्थलेऽव्याप्तिदोषो दातुं शक्यते। यतोहि समवायेन वह्निः स्वावयवेषु वर्ततेऽवयवावयविनोः समवायसंबंधस्य स्वीकारात्। तस्मात्समवायेन पर्वतादौ वह्न्यभावस्य धर्तुं शक्यतया समवायेन वह्न्यभावाधिकरणं पर्वतादि तन्निरूपित-वृत्तित्वमेव धूमे न तु वृत्तित्वाभावत्वं, अतस्तत्राव्याप्तिः प्रसज्येतेति चेन्न तन्निवारणाय साध्यतावच्छेदकसंबंधावच्छिन्नमिति विशेषणं साध्याभावशरीरे देयं। साध्यतावच्छेदकसंबंधशब्दस्य कोऽर्थः? येन संबंधेन साध्यः पक्षे वर्तते स संबंधः साध्यतावच्छेदकसंबंध इत्युच्यते। तथाहि प्रकृतस्थले साध्यो वह्निः पक्षे पर्वते

संयोगसंबंधेन वर्तते अत: साध्यतावच्छेदकसंबंध: संयोगसंबंध एव न तु समवायादि:। तथा च साध्यतावच्छेदकसंयोगसंबन्धेन पर्वतादौ वह्नि: सत्त्वेऽपि समवायसंबंधेन तत्र नास्ति। ततो लक्षणमित्थं भवति – साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्ति:। एवं सति प्रकृते साध्यतावच्छेदक संबंध: संयोगसंबंधस्तेनैव संबंधेन साध्याभावो ग्राह्य:, ततश्च साध्यतावच्छेदकसंयोग-संबंधावच्छिन्न प्रतियोगिताकसाध्याभावो वह्न्यभावस्तस्याधिकरणं पर्वतादि भवितुं नार्हति तत्र संयोगेन वह्निर्विद्यतानत्वात्किन्तु तादृशाभावस्याधिकरणं जलह्रदादिरेव तन्निरूपितवृत्तित्वं मीनादौ वृत्तित्वाभावत्वञ्च धूमे – इति कृत्वा तत्र पूर्वोक्ताव्याप्ति-दोषवारणं संभवति।

लेकिन प्रकृत लक्षण में साध्याभाव को किस संबंध से ग्रहण करना चाहिये यह नहीं कहा गया है, अर्थात् साध्याभाव के शरीर में संबंधविशेषग्राहक विशेषण नहीं दिया गया है। अत: जिस किसी भी संबंध से साध्याभाव को लेकर पर्वतो वह्निमान् धूमात् इस सद्धेतु स्थल में अव्याप्ति दोष दे सकते हैं। कैसे ? पर्वत में वह्नि संयोग संबंध से रहता है, समवायसंबंध से नहीं रहता है, अपितु अपने अवयवों में समवाय संबंध से रहता है क्योंकि अवयवावयविनो: समवाय: – यह सिद्धान्त है। अत: साध्य है वह्नि, समवाय संबंध से साध्य का अधिकरण है वह्न्यवयव, साध्याभाव वह्न्यभाव का अधिकरण होगा पर्वत, तन्निरूपित वृत्तित्व ही धूम में है, अवृत्तित्व नहीं। जिस लिये सद्धेतु में लक्षण नहीं घटा इसलिये लक्षण अव्याप्ति दोष से ग्रसित हुआ। इस दोष का निवारण करने के लिये लक्षण का साध्याभाव के शरीर में साध्यतावच्छेदकसंबंधावच्छिन्न यह विशेषण देना चाहिये। तब लक्षण का स्वरूप ऐसा होता है – साध्यतावच्छेदकसंबंधावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्ति:। साध्य जिस संबंध से पक्ष में रहता है उस संबंध को साध्यतावच्छेदकसंबंध कहा जाता है। अत: प्रकृतस्थल में साध्य वह्नि पक्ष पर्वत में संयोगसंबंध से रहने के कारण साध्यतावच्छेदकसंबंध है संयोगसंबंध, उस संबंध से साध्याभावाधिकरण पर्वत नहीं हो सकता किन्तु जलह्रदादि होगा, तन्निरूपित वृत्तित्व मीनादि में है और अवृत्तित्व धूम में होने से लक्षण सद्धेतु स्थल में समन्वय हो गया। अत: लक्षण में अव्याप्ति दोष नहीं रहा।

2. नन्वेवमपि तत्रैवाव्याप्तिस्तदवस्थैव, कथमिति चेदेकसत्त्वेऽपि द्वयं नास्तीति न्यायेन। कोऽयं न्याय:? कुत्रचिद्रामश्यामयोरन्वेषणार्थं कञ्चित्पुरुषं प्रेषितं, सोऽन्वेषको यदाऽऽगतस्तदा पृष्टश्चेत्किं तत्रोभयेऽस्ति न वेति, तत: सोऽन्वेषक:

प्रश्नानुरूपमुत्तरं दातुमुच्यते द्वयं नास्तीति, अयमेवैकसत्त्वेऽपि द्वयं नास्तीति न्यायः। एतेन न्यायेन व्याप्तिलक्षणे साध्याभावशरीरे साध्याभावस्कीदृग्ग्राह्य इत्यनुक्तत्वाद-व्याप्तिदोषो दातुं शक्यते। कथमिति चेत् पर्वते संयोगेन वह्निः सत्त्वेऽपि संयोगेनैव वह्निघटोभयं नास्ति यतस्तस्मात् साध्यतावच्छेदकसंयोगसंबंधावच्छिन्नप्रतियोगिताक-साध्याभावो वह्निघटोभयाभावस्तस्याधिकरणं पर्वतादि तन्निरूपितवृत्तित्वमेव धूमे न तु वृत्तित्वाभावमित्यतस्तत्राव्याप्तिः प्रसज्येतेति चेन्न तन्निवारणाय साध्यतावच्छेदकेतर धर्मानवच्छिन्नमिति विशेषणं साध्याभावशरीरे देयं। कोऽयं साध्यतावच्छेदकशब्दस्यार्थः? येन धर्मेणावच्छिन्नः सन् साध्यः पक्षे वर्तते सो धर्मः साध्यतावच्छेदकः। प्रकृतस्थले साध्यो वह्निः पक्षे पर्वते वह्नित्वावच्छेदेन वर्तते। वह्निघटोभयाभावस्य च द्वौ प्रतियोगिनौ वह्निर्घटश्च, अतोऽवच्छेदकावपि द्वौ वह्नित्वं घटत्वञ्च, एवं सति वह्निघटोभयाभावः साध्यतावच्छेदकवह्नित्वावच्छेदेन तदितरघटत्वावच्छेदेन चावच्छिन्नो भवति। ततो लक्षणमित्थमस्ति साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न प्रतियोगिताक साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिः। ततश्च साध्यता-वच्छेदकसंयोगसंबंधावच्छिन्नसाध्यतावच्छेदकवह्नित्वेतरघटत्वाद्यनावच्छिन्न-प्रतियोगिताक साध्याभावो वह्निघटोभयाभावो न भवति साध्यतावच्छेदक वह्नित्वेतर-घटत्वेनावच्छिन्नत्वात् किन्तु संयोगेन वह्नित्वेन वह्न्यभाव एव तस्याधिकरणं पर्वतादि भवितुं नार्हति किन्तु तादृशाभावस्याधिकरणं जलह्रदादिरेव तन्निरूपितवृत्तित्वं मीनादौ वृत्तित्वाभावत्वञ्च धूमे - इति कृत्वा तत्र पूर्वोक्ताव्याप्तिदोषवारणं संभवति।

उक्त विशेषण को देने के बावजूद भी उक्त सद्धेतु स्थल में पुनः अव्याप्ति दोष रह जाता है। कैसे? एकसत्त्वे अपि द्वयं नास्ति न्याय से, यदि कोई पूछें - वहां राम और श्याम दोनों हैं, तो वहां अकेले राम का रहने पर भी आप प्रश्न के अनुरूप जवाब देंगे - दोनों नहीं है। इसे एकसत्त्वे अपि द्वयं नास्ति न्याय कहते हैं। इस न्याय के अनुसार पर्वत में अकेले वह्नि रहने पर भी वह्निघट उभय नहीं है। अतः साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगिताक साध्याभावशब्द से उक्त न्याय के अनुसार वह्निघटोभयाभाव लिया जा सकता है, तादृश उभयाभाव का अधिकरण होगा पर्वत, क्योंकि पर्वत में वह्नि रहने पर भी वह्निघटोभय नहीं है, तन्निरूपित वृत्तित्व धूम में ही है, अवृत्तित्व नहीं। अतः प्रकृत सद्धेतु स्थल में लक्षण न घटने से लक्षण अव्याप्ति दोष से ग्रस्त हो गया। इस दोष को दूर करने के लिये लक्षण के साध्याभाव का शरीर में साध्यतावच्छेदकेतरधर्मानवच्छिन्न यह विशेषण देना होगा। तब लक्षण का स्वरूप ऐसा होगा - साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यता-

वच्छेदकेतरधर्मानवच्छिन्न प्रतियोगिताक साध्याभावाधिकरण निरूपितवृत्तित्वाभावो व्याप्तिः। साध्य जिस स्वधर्म अथवा स्वगतजाति से अवच्छिन्न होकर अर्थात् अधिकरण आदि अन्य वस्तु या अन्य धर्म से परिच्छिन्न न होकर पक्ष में रहता हो उस स्वधर्म अथवा स्वगतजाति को साध्यतावच्छेदक कहा जाता है। प्रकृतस्थल में साध्य है वह्नि, साध्यतावच्छेदक स्वगतजाति है वह्नित्व, उससे इतर घटत्व से अवच्छिन्न है वह्निघटोभयाभाव, क्योंकि वह्निघटोभयाभाव का प्रतियोगि वह्नि और घट दोनों है, उनके अवच्छेदक भी दो हैं - वह्नित्व और घटत्व। अतः उभयाभाव वह्नित्व से इतर घटत्व से अवच्छिन्न होने के कारण लक्षण में उपयोगी नहीं है। इसलिये साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकवह्नित्वेतरघटत्वाद्यन-वच्छिन्नप्रतियोगिताक साध्याभाव होगा केवल वह्न्यभाव, तादृश वह्न्यभाव का अधिकरण पर्वत नहीं हो सकता, क्योंकि एक सत्त्वे अपि द्वयं नास्ति न्याय के अनुसार पर्वत में भले वह्निघटोभयाभाव हो लेकिन संयोगेन वह्नित्वेतरघटत्वाद्यनवच्छिन्न वह्न्यभाव नहीं है, अपितु वह्नि है। अत एव साध्यतावच्छेदक संयोगसंबंधावच्छिन्न साध्यतावच्छेदकवह्नित्वेतरघटत्वद्यनवच्छिन्न प्रतियोगिताक साध्याभाव होगा केवल वह्न्यभाव, तादृश वह्न्यभाव का अधिकरण होगा जलह्रदादि, तन्निरूपित वृत्तित्व मीनादि में है और अवृत्तित्व धूम में होने से लक्षण सद्धेतु स्थल में समन्वय हो गया। अतः लक्षण में अव्याप्ति दोष नहीं रहा।

3. तथापि तत्रैवाव्याप्तिस्पुनस्तदवस्थैव, कथमिति चेत्? चालनीन्यायेन। कोऽयं न्यायः? तथाहि गोधूमस्य पेषणानन्तरं चालनिना चालितञ्चेत्ततश्चूर्णं पृथग्भवति मलञ्च पृथग्भवति, तत्र चूर्णे मलस्याभावो मले च चूर्णस्याभावो भवति, इत्थमेकस्यैव गोधूमस्य द्वयोः स्वरूपयोश्चूर्णमलयोरेकस्मिनन्यस्य अभावग्रहणमेव चालनीन्यायः। एवमेवैकस्यैव वह्नेः पर्वतमहानसचत्वरगोष्ठाद्याधारभेदादनेका भेदाः सन्ति पर्वतीयवह्नि, महानसीयवह्नि, चत्वरीयवह्नि, गोष्ठीयवह्निरित्यादयः। अतस्पर्वते पर्वतीयवह्निसत्त्वेऽपि महानसीयवह्न्यभावो गोष्ठीयवह्न्यभावश्चत्वरीयवह्न्यभाव इत्यादि तत्तद्वह्न्यभावो ग्रहीतुं शक्यते। एवमेव महानसेऽन्येषामभावश्चत्वरे चान्येषामभावो धर्तुं शक्यते। अत एवैतेनैव न्यायेन व्याप्तिलक्षणे साध्याभावशरीरे साध्याभावः कीदृग्ग्राह्य इत्युभयाभावोत्थदोषनिवारणाय पूर्वप्रदत्त विशेषणेनाप्यस्पष्टत्वादव्याप्तिदोषो दातुं शक्यते। कथमिति चेत् पर्वते संयोगेन वह्नित्वेतरघटत्वाद्यनावच्छिन्नवह्निः सत्त्वेऽपि संयोगेनैव वह्नित्वेतरघटत्वाद्यनावच्छिन्नेनैव महानसीयवह्निर्नास्तीति विशिष्टाभावं ग्रहीतुं

शक्यते यतस्तस्मात् साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकवह्नित्वेतर-घटत्वाद्यनवच्छिन्न प्रतियोगिताक साध्याभावो महानसीयवह्न्यभाव: तस्याधिकरणं पर्वतादि तन्निरूपितवृत्तित्वमेव धूमे न तु वृत्तित्वाभावमित्यतस्तत्राव्याप्ति: प्रसज्येतेति चेन्न तन्निवारणाय साध्यतावच्छेदकावच्छिन्नमिति विशेषणं साध्याभावशरीरे देयं। ततो लक्षणमित्थं भवति - साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकेतर-धर्मानवच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणनिरूपित वृत्तित्वाभावो व्याप्ति:। ततश्च साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदक वह्नित्वेतरघटत्वाद्यनावच्छिन्न साध्यतावच्छेदकवह्नित्वावच्छिन्न प्रतियोगिताक साध्याभावो महानसीयवह्न्यभावादयो धर्तुं न शक्यते यतोहि साध्यतावच्छेदककेवलव ह्नित्वेनानवच्छिन्नत्वाद् अपित्वाधाराद्यात्मकोपाधिविशिष्टास्ते, अतएव संयोगेन वह्नित्वेन वह्न्यभाव एव ग्राह्यस्तस्याधिकरणं पर्वतादि भवितुं नार्हति किन्तु तादृशाभावस्याधिकरणं जलह्रदादिरेव तन्निरूपितवृत्तित्वं मीनादौ वृत्तित्वाभावञ्च धूमे - इति कृत्वा तत्र पूर्वोक्ताव्याप्तिवारणं संभवति।

उक्त विशेषण को देने के बावजूद भी उक्त सद्धेतु स्थल में ही पुन: अव्याप्ति दोष रह जाता है। कैसे? चालनी न्याय से, गेहूं को पीसने के बाद छलनी से छानते हैं तो आटा और कचडा (भूसा) अलग हो जाता है जब तब आटे में कचडे (भूसे) का अभाव और कचडे (भूसे) में आटे का अभाव होता है। इसे चालनी न्याय कहते हैं। चालनी न्याय से जैसे परस्पर अभाव ग्रहण होता है उसी प्रकार पर्वत में पर्वतीयवह्नि रहने पर भी महानसीयवह्नि का अभाव है और महानस में पर्वतीयवह्नि का अभाव है, ऐसे ग्रहण किया जा सकता है। इस प्रकार सभी वह्न्यधिकरणों में तत्तद्वह्न्यभाव मिल जायेगा। अत: साध्यतावच्छेदकसंबंध संयोगसंबंध से चालनी न्याय के बल पर साध्याभावशब्द से महानसीयवह्न्यभाव को लिया जा सकता है, तादृश महानसीयवह्न्यभाव का अधिकरण होगा पर्वत, तन्निरूपित वृत्तित्व ही धूम में है, अवृत्तित्व नहीं। अत: प्रकृत सद्धेतु स्थल में लक्षण न घटने से लक्षण अव्याप्ति दोष से ग्रस्त हो गया। इस दोष को दूर करने के लिये लक्षण का साध्याभाव के शरीर में साध्यतावच्छेदकावच्छिन्न यह विशेषण देना होगा। तब लक्षण का स्वरूप ऐसा होगा साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतर धर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकसाध्याभावाधिकरणनिरूपित वृत्तित्वाभावो

व्याप्तिः। साध्य जिस स्वधर्म अथवा स्वगतजाति से अवच्छिन्न होकर अर्थात् अधिकरण आदि अन्य वस्तु या अन्य धर्म से परिच्छिन्न न होकर पक्ष में रहता हो उस स्वधर्म अथवा स्वगतजाति को साध्यतावच्छेदक कहा जाता है। प्रकृतस्थल में साध्य है वह्नि, स्वगतजाति है वह्नित्व, उससे अवच्छिन्न होगा सकल वह्नि जिसके अन्तर्गत पर्वतीयवह्नि भी है। अतः साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकवह्नित्वेतरघटत्वाद्यनवच्छिन्न साध्यतावच्छेदकवह्नित्वावच्छिन्न प्रतियोगिताक साध्याभाव होगा वह्निसामान्याभाव, जिसके अन्तर्गत पर्वतीयवह्न्यभाव भी है, तादृश वह्निसामान्याभाव का अधिकरण पर्वत नहीं हो सकता (क्योंकि पर्वत में संयोगेन वह्नित्वेन वह्नि है) किन्तु जलह्रदादि होगा, तन्निरूपित वृत्तित्व मीनादि में है और अवृत्तित्व धूम में होने से लक्षण सद्धेतु स्थल में समन्वय हो गया। अतः लक्षण में अव्याप्ति दोष नहीं रहा।

4. तथाप्यव्याप्यवृत्तिकगुणादिसाध्यकसद्धेतुस्थलेऽव्याप्तिदोषो भवति। तथाहि एतद्वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्र सद्धेतुस्थलेऽव्याप्तिदोषो भवति। कथमयं सद्धेतुरिति चेद् साध्यः कपिसंयोगः, साध्याभावः कपिसंयोगाभावः, तस्याधिकरणं भूतलादि गुणादिर्वा, तन्निरूपितवृत्तित्वं भूतलत्वादौ गुणत्वादौ वा न तु एतद्वृक्षत्वे हेताविति व्यभिचारलक्षणस्यासमन्वयादयं सद्धेतुः। व्याप्यवृत्तिकपदार्थाः संयोगादि-गुणास्स्वसमानाधिकरणाभाववन्तः। अतश्शखावच्छेदेन वृक्षे कपिसंयोगो यदा भवति तदा तत्रैव मूलावच्छेदेन कपिसंयोगाभावोऽप्यस्तीति दृष्टमेव। अत एव मूलावच्छेदेन कपिसंयोगाभावं वृक्षे धर्तुं शक्यते। ततश्च साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदककपिसंयोगत्वेतरघटत्वाद्यनावच्छिन्नसाध्यतावच्छेदककपिसंयोग-त्वावच्छिन्न प्रतियोगिताकसाध्याभावो कपिसंयोगाभावः तस्याधिकरणं मूलावच्छेदेन वृक्ष एव तन्निनिरूपित वृत्तित्वं एतद्वृक्षत्वे न तु वृत्तित्वाभावत्वमिति सद्धेतावव्याप्तिः प्रसज्येत। तन्निवारणार्थं व्याप्तिलक्षणघटकसाध्याभावशरीरे प्रतियोगिवैयधिकरण्यमपि विशेषणं देयं। तस्य कोऽर्थः? प्रतियोगिनो व्यधिकरणनिष्ठाभावः = प्रतियोग्यनधिकरणवृत्त्यभावः अर्थात् साध्याभावाधिकरणं यत्तदेव प्रतियोग्य-नधिकरणमपि स्यात्। तथा च लक्षणमीदृक् साध्यतावच्छेदकसंबंधावच्छिन्न साध्यता-वच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोग्यनधिकरणं तन्निरूपितवृत्तित्वाभावो व्याप्तिः। ततश्च साध्यतावच्छेदकसमवाय संबंधावच्छिन्न साध्यतावच्छेदककपिसंयोगत्वेतरघटत्वाद्यनवच्छिन्न साध्यतावच्छेदककपि-संयोगत्वावच्छिन्न प्रतियोगिताकसाध्याभावो कपिसंयोगाभावः तस्याधिकरणं यत्

प्रतियोगिन: कपिसंयोगस्यानधिकरणं वृक्षो भवितुं नार्हति यतस्तत्र शाखावच्छेदेन कपिसंयोगोऽस्त्येव किन्तु तादृशाभावस्याधिकरणं सत् प्रतियोग्यनधिकरणं भूतलादिर्गुणादिर्वा भवितुमर्हति तन्निरूपितवृत्तित्वं भूतलत्वादौ गुणत्वादौ वाऽस्ति, अवृत्तित्वञ्चैतद्वृक्षत्वे इति कृत्वा सद्धेतौ समन्वयादव्याप्तिदोषो निवृत्तः।

तथापि अव्याप्यवृत्तिकगुणादिसाध्यकसद्धेतुस्थल में पुनः अव्याप्ति दोष होगा। अव्याप्यवृत्तिवाले गुण अपने अधिकरण में पूर्णरूप से व्याप्त होकर नहीं रहते हैं अर्थात् जैसे अव्याप्यवृत्ति गुण संयोग है, वह अपने अधिकरण के एकदेश में है, तो अपने अधिकरण के ही अन्यदेश में नहीं रहता है। इसलिये एतद्वृक्षः कपिसंयोगी एतद्वृक्षत्वात् इस सद्धेतु स्थल में अव्याप्ति दोष होगा। कैसे? यत्र यत्र एतद्वृक्षत्वं तत्र तत्र कपिसंयोगत्वं यह व्याप्ति अव्यभिचारी होने से यह हेतु सद्धेतु है। वृक्ष में शाखा पर कपिसंयोग है और उसी वृक्ष के मूल में कपिसंयोग का अभाव है। इस स्थल में साध्यतावच्छेदकसंबंध है समवाय और साध्यतावच्छेदक धर्म है कपिसंयोगत्व। उक्त लक्षणानुसार साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदककपिसंयोगत्वेतरघटत्वाद्यनवच्छिन्न साध्यतावच्छेदककपिसंयोगत्वावच्छिन्न प्रतियोगिताक साध्याभाव कपिसंयोगाभाव का अधिकरण मूलावच्छेदेन वृक्ष ही है, तन्निरूपित वृत्तित्व एतद्वृक्षत्व सद्धेतु में है, अवृत्तित्व नहीं आया। अतः लक्षण अव्याप्ति दोष से ग्रस्त हो गया। इस दोष के निवारण के लिये साध्याभाव शरीर में प्रतियोगिव्यधिकरण विशेषण देना चाहिये। क्योंकि मूलावच्छेदेन वृक्षवृत्ति कपिसंयोगाभाव प्रतियोगि कपिसंयोग का समानाधिकरण ही है, व्यधिकरण नहीं है। अब लक्षण का यह स्वरूप बनता है - साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभाव अधिकरणं यत्प्रतियोग्यनधिकरणं तन्निनिरूपित वृत्तित्वाभावो व्याप्तिः। प्रकृत स्थल में देखें साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदककपिसंयोगत्वेतर घटत्वाद्यनवच्छिन्न साध्यतावच्छेदककपिसंयोगत्वावच्छिन्न प्रतियोगिताक साध्याभाव कपिसंयोगाभाव का अधिकरण होते हुए प्रतियोगि कपिसंयोग का व्यधिकरण भी हो ऐसा कहने पर तादृशाभावाधिकरण एवं प्रतियोगिव्यधिकरण वृक्ष नहीं हो सकता है, क्योंकि वह मूलावच्छेदेन तादृशाभावाधिकरण होने पर भी प्रतियोगि का समानाधिकरण है, किन्तु तादृशाभावाधिकरण प्रतियोगिव्यधिकरण भूतलादि होगा, तन्निरूपित वृत्तित्व भूतलत्वादि में और अवृत्तित्व एतद्वृक्षत्व में आने से लक्षण सद्धेतु स्थल में समन्वय हो गया। अतः लक्षण में अव्याप्ति दोष नहीं रहा।

5. ननु घटो विशिष्टसत्तावान् जातेरित्यत्रासद्धेतुस्थले विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेनातिव्याप्तिः स्यात्। कथमयमसद्धेतुः? साध्या विशिष्टसत्ता, तस्याभावो विशिष्टसत्ताभावः, तस्याधिकरणं गुणादि, तन्निरूपितवृत्तित्वमेव जाताविति हेतौ व्यभिचारलक्षणसमन्वयादयं हेतुरसद्धेतुः। कोऽयं न्यायः? सत्ता द्विविधा शुद्धसत्ता विशिष्टसत्ता चेति। तत्र शुद्धसत्ता द्रव्यगुणकर्मसु त्रिषु वर्तते, किन्तु विशिष्टसत्ता प्रकृतस्थले गुणकर्मावृत्ति द्रव्यमात्रवृत्ति सत्ता गृह्यते। प्रत्येकस्मिन् पदार्थे द्वौ धर्मौ स्तः, एकं सामान्यं द्वितीयं विशेषं, यथा घटे द्रव्यत्वं घटत्वञ्च द्रव्ये द्रव्यत्वमात्रं । एवमेव विशिष्टसत्तायां सत्तात्वं विशिष्टसत्तात्वञ्चेति द्वाववच्छेदकौ शुद्धसत्तायान्तु सत्तात्वमात्रं भवति। अत एव सत्तात्वावच्छेदेनोभयोरभेदः, किन्तु विशिष्टसत्तात्वावच्छेदेन विशिष्टसत्तामात्रं गृह्यते। अत एव सत्तात्वावच्छेदेन विशिष्टं शुद्धान्नातिरिच्यत इति न्यायो संजातः। एतावति लक्षणे प्रतियोगि केन धर्मेण ग्राह्य इति नोक्तं, अत एवोक्तन्यायेन प्रकृतस्थलेऽतिव्याप्तिदोषो दातुं शक्यते। कथं? अत्र साध्यतावच्छेदकसंबंधः समवाय यतोहि साध्या विशिष्टसत्ता पक्षे घटे समवायसंबंधेन विद्यते जातिव्यक्तिनोः समवायात्। तथा च साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वेतरघटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्न प्रतियोगिताक साध्याभावो विशिष्टसत्ताभावः तस्याधिकरणं यत् उक्तन्यायेन शुद्धसत्तात्मक प्रतियोगिनोऽनधिकरणं गुणकर्मादि भवितुं नार्हति, यतोहि तत्र शुद्धसत्ता विद्यमानत्वात्, अपितु तस्य व्यधिकरणं सामान्यादि तन्निरूपितवृत्तित्वं समवायेऽवृत्तित्वञ्च जातावित्यसद्धेतावतिव्याप्तिः स्यात्। तन्निवारणाय प्रतियोगितावच्छेदकावच्छिन्नं विशेषणं देयं। येन धर्मेणावच्छिन्नः सन् प्रतियोगि पक्षे वर्तते सो धर्मः प्रतियोगितावच्छेदको भवति। प्रकृतस्थले सश्च विशिष्टसत्तात्वमेव। ततश्च लक्षणमित्थं भवति – साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपितवृत्तित्वाभावो व्याप्तिः। तथा च साध्यतावच्छेदकसमवायसंबंधाच्छिन्नसाध्यतावच्छेदकविशिष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्न प्रतियोगिताक साध्याभाव विशिष्टसत्ताभावाधिकरणं यत्प्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्न प्रतियोगी विशिष्टसत्ता एव न तु शुद्धसत्ता, यतोहि शुद्धसत्ता विशिष्टसत्तात्वावच्छेदकेनानवच्छिन्नं भवति, अत एव विशिष्टसत्तात्वावच्छिन्न विशिष्टसत्तात्मकप्रतियोग्यनधिकरणं गुणकर्म एव तन्निरूपित वृत्तित्वमेव जातौ न तु वृत्तित्वाभाव इति कृत्वाऽतिव्याप्तिदोषो निवृत्तः।

फिरभी विशिष्टं शुद्धान्नातिरिच्यते इस न्याय से घटो विशिष्टसत्तावान् जातेः इस असद्धेतु स्थल में लक्षण के जाने से अतिव्याप्ति दोष होगा। क्योंकि प्रतियोगि को किस धर्म से ग्रहण करना चाहिये यह नहीं कहा गया है। कैसे? यत्र यत्र जातिः तत्र तत्र विशिष्टसत्ता यह व्यभिचारी व्याप्ति है क्योंकि प्रकृत स्थल में गुणकर्म में न रहनेवाली घटात्मकद्रव्यमात्र में रहनेवाली सत्ता को विशिष्टसत्ताशब्द से साध्य के रूप में ग्रहण किया गया है। जाति द्रव्यगुणकर्म तीनों में रहती है। प्रत्येक वस्तु में केवल अपने में रहनेवाला एक विशेष धर्म होता है, जिसे विशिष्ट धर्म कहते हैं और एक सामान्यधर्म होता है जो कि अपने में और अन्यों में भी रहता है जिसे शुद्धधर्म कहते हैं। शुद्धधर्म दृष्ट्या उस धर्मवाले समस्त वस्तु समान हो जाते हैं और विशिष्ट धर्म दृष्ट्या एक ही विशेष वस्तु ग्रहण होगा। शुद्धधर्म दृष्टि से विशेष वस्तु और सामान्य वस्तु दोनों को समानरूप से ग्रहण करना ही विशिष्टं शुद्धान्नातिरिच्यते न्याय है। इस न्याय के आधार पर प्रकृत स्थल में दोष दिया जा रहा है। क्योंकि प्रकृत स्थल में गुणकर्म में न रहनेवाली घटात्मकद्रव्यमात्र में रहनेवाली सत्ता को विशिष्टसत्ताशब्द से साध्य के रूप में ग्रहण किया गया है। शुद्धसत्ता द्रव्यगुणकर्म तीनों में रहती है। साध्य विशिष्टसत्ता पक्ष घट में समवाय संबंध से रहती है। अतः साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदक विशिष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्न-प्रतियोगिताक साध्याभाव विशिष्टसत्ताभाव का अधिकरण होते हुए उक्त न्याय के अनुसार तादृशाभाव का प्रतियोगि जैसे विशिष्टसत्ता है वैसे शुद्धसत्ता भी होगी उसका व्यधिकरण सामान्यादि होगा, तन्निरूपित वृत्तित्व समवाय में, अवृत्तित्व जाति में है। अर्थात् असद्धेतु स्थल में समन्वय हो गया। अतः लक्षण में अतिव्याप्ति दोष आ गया। इस दोष को दूर करने के लिये साध्याभाव के शरीर में प्रतियोगितावच्छेदकावच्छिन्न विशेषण देना होगा। तब प्रतियोगि विशिष्टसत्ता का अवच्छेदक विशिष्टसत्तात्व होगा, उक्त न्याय के अनुसार शुद्धसत्तात्व को प्रतियोगितावच्छेदकशब्द से नहीं ग्रहण कर सकते हैं। तब लक्षण का स्वरूप ऐसा होगा - साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्नसाध्यता-वच्छेदकावच्छिन्न प्रतियोगिताकसाध्याभावाधिकरणं यत्प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निनिरूपित वृत्तित्वाभावो व्याप्तिः। अब प्रकृत स्थल में दोष नहीं रहेगा। क्योंकि साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदक विशिंष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्न-

प्रतियोगिताकसाध्याभाव विशिष्टसत्ताभाव का अधिकरण होते हुए तादृशाभाव का प्रतियोगि प्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्न विशिष्टसत्ता ही होगी, शुद्धसत्ता नहीं हो सकती, अत: तादृशाभाव का अधिकरण होते हुए विशिष्टसत्तात्वावच्छिन्न-विशिष्टसत्तारूपी प्रतियोगि का व्यधिकरण गुणकर्म ही होगा, क्योंकि विशिष्टसत्ता द्रव्यमात्र में रहती है गुणकर्म में नहीं, तन्निरूपित वृत्तित्व जाति में है, अवृत्तित्व नहीं। इस प्रकार असद्धेतु स्थल में लक्षण के न जाने से अतिव्याप्ति दोष नहीं रहा।

6. नन्वेवमपि पूर्वोक्तासद्धेतुस्थलेऽतिव्याप्तिस्तथैव स्थास्यति। कथं ? केन संबंधेन प्रतियोगी ग्राह्य इति नोक्तं। अत: समवायेन गुणादौ विशिष्टसत्ताया असत्त्वेऽपि कालिकसंबंधेन सत्त्वात्। यतोहि नित्येषु कालिकायोगादिति न्यायात्कालिकसंबंधेन नित्यपदार्थेषु किंचिदप्यसत्त्वेऽप्यनित्यपदार्थेषु सर्वं वर्तते। तथा च साध्यतावच्छेदक-समवायसंबंधावच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्न प्रतियोगिताक साध्याभाव विशिष्टसत्ता-भावाधिकरणं यत्प्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्न विशिष्टसत्तात्मक-प्रतियोग्यनधिकरणं कालिकसंबंधेन गुणकर्मादि भवितुं नार्हत्यपि तु सामान्यादि तन्निरूपितवृत्तित्वं समवायेऽवृत्तित्वञ्च जातौ इति कृत्वाऽतिव्याप्तिदोषो भवति। तन्निवारणाय प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसंबंधावच्छिन्नं विशेषणं देयं। येन संबंधेन प्रतियोगि पक्षे वर्तते स संबंध: प्रतियोगितावच्छेदकसंबंध:। सश्च प्रकृतस्थले समवायो न तु कालिक:, यतोहि प्रतियोगि विशिष्टसत्ता समवायसंबंधेन पक्षे घटे वर्तते। तेन लक्षणं चेत्थं साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकसाध्या-भावाधिकरणं यत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपितवृत्तित्वाभावो व्याप्ति:। ततश्च साध्यतावच्छेदकसमवाय संबंधावच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदक विशिष्टसत्तात्वावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणं विशिष्टसत्ताभावाधिकरणं यत्प्रतियोगितावच्छेदकसमवायसंबंधावच्छिन्न विशिष्टसत्तात्वावच्छिन्न-विशिष्टसत्तात्मकप्रतियोग्यनधिकरणं गुणकर्म एव तन्निरूपितवृत्तित्वमेव जातौ न तु वृत्तित्वाभाव इति कृत्वाऽतिव्याप्तिदोषो निवृत्त:।

किन्तु प्रतियोगि को अपने व्यधिकरण में किस संबंध से ग्रहण करना चाहिये यह नहीं कहा गया है, अत: उक्त असद्धेतुस्थल में ही पुन: अतिव्याप्ति दोष होगा। कैसे ? नित्येषु कालिकायोगात् इस नियम से परमाण्वाकाशकालदिगात्मामन,

नित्यगुण, सामान्य, आदि नित्य पदार्थों में कालिकसंबंध से कुछ भी वस्तु नहीं रहती है, किन्तु अनित्यपदार्थों में सब कुछ रहता है। अतः साध्यतावच्छेदकसमवाय संबंधावच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदक विशिष्टसत्तात्वावच्छिन्न प्रतियोगिताकसाध्याभाव विशिष्टसत्ताभाव का अधिकरण होते हुए कालिकसंबंध से तादृशाभाव का प्रतियोगितावच्छेदकविशिष्ट-सत्तात्वच्छिन्नविशिष्टसत्तारूपी प्रतियोगि का व्यधिकरण सामान्यादि होगा, क्योंकि सामान्यादि नित्यपदार्थों में कालिकसंबंध से विशिष्टसत्ता नहीं रहती है, तन्निरूपित वृत्तित्व समवाय में है, जाति में नहीं है अर्थात् अवृत्तित्व है। इस प्रकार असद्धेतु स्थल में लक्षण का जाने से अतिव्याप्ति दोष हो गया। इस दोष को निवारण करने के लिये साध्याभाव शरीर में प्रतियोगितावच्छेदकसंबंधावच्छिन्न विशेषण देना चाहिये। तब लक्षण इस प्रकार होगा - साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकसाध्या-भावाधिकरणं यत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निनिरूपित वृत्तित्वाभावो व्याप्तिः। अब प्रकृतस्थल में दोष नहीं होगा क्योंकि प्रतियोगि अपने अधिकरण में जिस संबंध से रहता है उसे प्रतियोगितावच्छेदकसंबंध कहा जाता है, प्रकृतस्थल में प्रतियोगि विशिष्टसत्ता अपने अधिकरण घट में समवायसंबंध से रहती है कालिक संबंध से नहीं। अतः साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वेतर-पटत्वाद्यनवच्छिन्न साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकसाध्याभाव विशिष्टसत्ता के अभाव का अधिकरण होते हुए प्रतियोगितावच्छेदक-समवायसंबंधावच्छिन्न प्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्न विशिष्टसत्तारूपी प्रतियोगि का व्यधिकरण गुणकर्म ही होगा, तन्निरूपित वृत्तित्व जाति में है, अवृत्तित्व नहीं। इस प्रकार असद्धेतु स्थल में लक्षण के न जाने से अतिव्याप्ति दोष नहीं रहा।

अथवा नन्वेवमपि आत्मा ज्ञानवान् सत्त्वादित्यसद्धेतुस्थलेऽतिव्याप्तिर्भवति। कथमयमसद्धेतुः? साध्यं ज्ञानं, साध्याभाव ज्ञानाभाव, तस्याधिकरणं घटादिः, तन्निरूपितवृत्तित्वं सत्तायामिति व्यभिचारलक्षणस्य सत्त्वे हेतौ समन्वयादयमसद्धेतुः। कथञ्च दोषः? एतावति लक्षणे केन संबंधेन प्रतियोगी ग्राह्य इति नोक्तं। अतः समवायेन ज्ञानं घटादावसत्त्वेऽपि कालिकसंबंधेन सत्त्वात्। यतोहि नित्येषु कालि-कायोगादिति न्यायात्कालिकसंबंधेन नित्यपदार्थेषु किंचिदप्यसत्त्वेऽप्यनित्यपदार्थेषु सर्वं वर्तते। तथा च साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकज्ञान-

त्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकज्ञानत्वावच्छिन्न प्रतियोगिताक साध्याभाव ज्ञानाभावाधिकरणं यत्प्रतियोगितावच्छेदकज्ञानत्वावच्छिन्नज्ञानात्मकप्रतियोग्यनधिकरणं कालिकसंबंधेन घटादि भवितुं नार्हत्यपि तु सामान्यादि तन्निरूपितवृत्तित्वं समवायेऽवृत्तित्वञ्च सत्तायां इति कृत्वाऽतिव्याप्तिदोषो भवति। तन्निवारणाय प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसंबंधावच्छिन्नं विशेषणं देयं। येन संबंधेन प्रतियोगि पक्षे वर्तते स संबंधः प्रतियोगितावच्छेदकसंबंधः। सश्च प्रकृतस्थले समवायो न तु कालिकः, यतोहि प्रतियोगि ज्ञानं समवाय संबंधेन पक्षे आत्मनि वर्तते। तेन लक्षणञ्चेत्थं साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगिता-वच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपितवृत्तित्वाभावो व्याप्तिः। ततश्च साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकज्ञानत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकज्ञानत्वावच्छिन्न प्रतियोगिताक साध्याभावज्ञानाभावाधिकरणं यत्प्रतियोगितावच्छेदकसमवाय-संबंधावच्छिन्न प्रतियोगितावच्छेदकज्ञानत्वावच्छिन्न ज्ञानात्मकप्रतियोग्यनधिकरणं घटादिरेव तन्निरूपितवृत्तित्वमेव सत्तायां न तु वृत्तित्वाभाव इति कृत्वाऽतिव्याप्तिदोषो निवृत्तः।

**अथवा** प्रतियोगि को अपने व्यधिकरण में किस संबंध से ग्रहण करना चाहिये यह नहीं कहा गया है, अतः एक दूसरे असद्धेतुस्थल में पुनः अतिव्याप्ति दोष होगा। कैसे? नित्येषु कालिकायोगात् इस नियम से परमाण्वाकाशकाल-दिगात्मामन, नित्यगुण, सामान्य, आदि नित्य पदार्थों में कालिकसंबंध से कुछ भी वस्तु नहीं रहती है। आत्मा ज्ञानवान् सत्त्वात्, यह असद्धेतुस्थल है, क्योंकि यत्र यत्र सत्तात्वं तत्र तत्र ज्ञानवत्त्वं यह व्याप्ति आत्म भिन्न सभि वस्तु में व्यभिचारी है। इस असद्धेतु स्थल में साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकज्ञानत्वेतर पटत्वाद्यनवच्छिन्न साध्यतावच्छेदकज्ञानात्वावच्छिन्न प्रतियोगिताक साध्याभाव ज्ञानाभाव का अधिकरण होते हुए कालिकसंबंध से तादृशाभाव का प्रतियोगिता-वच्छेदकज्ञानत्वावच्छिन्न ज्ञानरूपी प्रतियोगि का व्यधिकरण सामान्यादि होगा, क्योंकि सामान्यादि नित्यपदार्थों में कालिकसंबंध से ज्ञान नहीं रहता है, तन्निरूपित वृत्तित्व समवाय में है, सत्ता में नहीं है अर्थात् अवृत्तित्व है। इस प्रकार असद्धेतु स्थल में लक्षण का जाने से अतिव्याप्ति दोष हो गया। इस दोष का निवारण करने के लिये साध्याभाव शरीर में प्रतियोगितावच्छेदकसंबंधावच्छिन्न विशेषण देना चाहिये। तब

लक्षण इस प्रकार होगा - साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतर-धर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत् प्रतियोगितावच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निनिरूपित वृत्तित्वाभावो व्याप्तिः। अब प्रकृतस्थल में दोष नहीं होगा क्योंकि प्रतियोगि अपने अधिकरण (पक्ष) में जिस संबंध से रहता है उसे प्रतियोगितावच्छेदकसंबंध कहा जाता है, प्रकृतस्थल में प्रतियोगि ज्ञान अपने अधिकरण (पक्ष) आत्मा में समवायसंबंध से रहता है, कालिकसंबंध से नहीं। अतः साध्यतावच्छेदकसमवायसंबंधावच्छिन्न साध्यतावच्छेदकज्ञानत्वेतरपटत्वाद्यन-वच्छिन्न साध्यतावच्छेदकज्ञानत्वावच्छिन्नप्रतियोगिताक साध्याभाव ज्ञानाभाव का अधिकरण होते हुए प्रतियोगितावच्छेदकसमवायसंबंधावच्छिन्न प्रतियोगितावच्छेदक ज्ञानत्वावच्छिन्न ज्ञानरूपी प्रतियोगि का व्यधिकरण घटपटगुणकर्मादि होगा, तन्निरूपित वृत्तित्व सत्ता में है, अवृत्तित्व नहीं। इस प्रकार असद्धेतु स्थल में लक्षण के न जाने से अतिव्याप्ति दोष नहीं रहा।

7. नन्वेवमपि घट आत्मभिन्नं द्रव्यत्वादित्यत्रासद्धेतुस्थलेऽतिव्याप्तिर्भवति। कथमयमसद्धेतुः? साध्य आत्मभेदः, साध्याभाव आत्मभेदाभाव, तस्याधिकरणं आत्मा, तन्निरूपितवृत्तित्वमेव द्रव्यत्वे हेतौ, ततश्चायमसद्धेतुः। कथञ्च दोषः? वृत्तित्वं केन संबंधेन ग्राह्यमिति नोक्तं। अतः नित्येषु कालिकायोगादिति न्यायेन नित्यपदार्थेष्वात्मादिषु किंचिदपि वस्तु न भवति। ततश्च साध्यतावच्छेदक तादात्म्यसंबंधावच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वेतरपटत्वाद्यनवच्छिन्न साध्यताव-च्छेदकात्मभिन्नत्वावच्छिन्न प्रतियोगिताक साध्याभावात्मभेदाभावाधिकरणं यत्प्रतियोगितावच्छेदकतादात्म्यसंबंधावच्छिन्न प्रतियोगितावच्छेदकात्मभिन्नत्वा-वच्छिन्नात्मभेदात्मकप्रतियोग्यनधिकरणं आत्मा तन्निरूपितवृत्तित्वं कालिकसंबंधेन कुत्रापि न भवति किन्तु वृत्तित्वाभावत्वं द्रव्यत्वे इति कृत्वाऽतिव्याप्तिदोषो भवति। तन्निवारणाय वृत्त्यभावशरीरे हेतुतावच्छेदकसंबंधावच्छिन्नं विशेषणं देयं। येन संबंधेन हेतुः पक्षे वर्तते सः संबंधो हेतुतावच्छेदकसंबंधः। प्रकृतस्थले सश्च समवायः, यतो द्रव्यत्वं हेतुः पक्षे घटे समवायसंबंधेन वर्तते, जातिव्यक्तिनोः समवायात्। ततश्च लक्षणमित्थं साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगितावच्छेदक-संबंधावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणं तन्निरूपित हेतुतावच्छेदकसंबंधावच्छिन्न प्रतियोगिताकवृत्तित्वाभावो व्याप्तिः। ततश्च

साध्यतावच्छेदकतादात्म्यसंबंधाच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वेतरपटत्वाद्य-नवच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वावच्छिन्न प्रतियोगिताक साध्याभावात्मभेदाभावाधिकरणं यत्प्रतियोगितावच्छेदकतादात्म्यसंबंधावच्छिन्न प्रतियोगितावच्छेदकात्माभिन्नत्वावच्छिन्नात्मभेदात्मकप्रतियोग्यनधिकरणं आत्मैव तन्निरूपित हेतुतावच्छेदकसमवाय-संबंधावच्छिन्नप्रतियोगिताकवृत्तित्वमेव द्रव्यत्वेऽसद्धेतौ न तु वृत्तित्वाभाव इति कृत्वाऽति-व्याप्तिदोषो निवृत्त:।

लेकिन लक्षण में उक्त तादृश अधिकरण निरूपित वृत्तित्व किस संबंध से ग्रहण करना चाहिये यह नहीं कहा गया है। घट आत्मभिन्नो द्रव्यत्वात्, यह असद्धेतुस्थल है, क्योंकि यत्र यत्र द्रव्यत्वं तत्र तत्र आत्मभिन्नत्वं यह व्याप्ति आत्मा में ही व्यभिचारी है, क्योंकि आत्मा में द्रव्यत्व हेतु है किन्तु आत्मभिन्नत्व नहीं है। इस असद्धेतु स्थल में पुन: अतिव्याप्ति दोष होगा। इस स्थल में साध्यतावच्छेदकसंबंध तादात्म्य है, क्योंकि साध्य आत्मभेद पक्ष घट में तादात्म्यसंबंध से रहता है। जिस संबंध से हेतु पक्ष में रहता है वह हेतुतावच्छेदकसंबंध है। प्रकृत स्थल में हेतु द्रव्यत्व पक्ष घट में समवायसंबंध से रहता है, अत: हेतुतावच्छेदकसंबंध समवाय है। साध्यतावच्छेदकतादात्म्यसंबंधावच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वेतर पटत्वाद्यनवच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वावच्छिन्नप्रतियोगिताक साध्याभाव आत्मभेदाभाव का अधिकरण होते हुए प्रतियोगितावच्छेदकतादात्म्यसंबंधावच्छिन्न प्रतियोगितावच्छेदकात्मभिन्नत्वावच्छिन्नात्मभेदरूपी प्रतियोगि का व्यधिकरण आत्मा होगा, तन्निरूपित वृत्तित्व कालिकसंबंध से किसी में भी नहीं है, अत: अवृत्तित्व द्रव्यत्वरूपी असद्धेतु स्थल में होने से लक्षण में अतिव्याप्ति दोष हो गया। इस अतिव्याप्ति दोष को दूर करने केलिये वृत्तित्वाभावशरीर में हेतुतावच्छेदकसंबंधावच्छिन्न विशेषण देना होगा। तब लक्षण का स्वरूप ऐसा होगा साध्यतावच्छेदक-संबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निनिरूपित हेतुतावच्छेदक संबंधावच्छिन्नप्रतियोगिताक वृत्तित्वाभावो व्याप्ति:। अब प्रकृतस्थल में घटाके देखें साध्यतावच्छेदकतादात्म्यसंबंधावच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वेतरपट-त्वाद्यनवच्छिन्न साध्यतावच्छेदकात्मभिन्नत्वावच्छिन्न प्रतियोगिताक साध्याभाव आत्मभेदाभाव का अधिकरण होते हुए प्रतियोगितावच्छेदकतादात्म्यसंबंधावच्छिन्न-प्रतियोगितावच्छेदक आत्मभिन्नत्वावच्छिन्न आत्मभेदरूपी प्रतियोगि का व्यधिकरण आत्मा होगा, तन्निरूपित हेतुतावच्छेदकसमवायसंबंध से अवच्छिन्न वृत्तित्व द्रव्यत्व

में है, अत: अवृत्तित्व द्रव्यत्वरूपी असद्धेतु स्थल में न होने से लक्षण में अतिव्याप्ति दोष नहीं रहा।

8. नचैवमपि पर्वतो धूमवान् वह्नेरित्यत्रासद्धेतुस्थलेऽतिव्याप्तिः स्यात्। कथमयमसद्धेतुः? आरम्भे दर्शितमेतत्। कथञ्च दोषः? केन धर्मेण वृत्तिता ग्राह्यमिति नोक्तं। अर्थाद्यत्किंचिद्वृत्त्यभावोऽन्वेषणीयः सकलवृत्त्यभावो वा ग्राह्यमित्यनुक्तत्वाद् दोषः स्यात्। कथञ्च दोषः? साध्यतावच्छेदकसंयोगसंबंधाच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्नप्रतियोगिताकसाध्याभावधूमाभावाधिकरणं यत्प्रतियोगितावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमात्मकप्रतियोग्यनधिकरणं जलह्रदादि तन्निरूपित हेतुतावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगिताकवृत्तित्वं मीनादाववृत्तित्वञ्च वह्नावसद्धेताविति कृत्वाऽतिव्याप्तिदोषो भवति। तन्निवारणाय वृत्त्यभावशरीरे वृत्तितात्वावच्छिन्नं (वृत्तितावच्छेदकावच्छिन्नं) विशेषणं देयं। ततश्च तादृशाभावाधिकरणनिरूपितसकलवृत्त्यभावो ग्राह्यः, तेन जलह्रदादि निरूपितवृत्त्यभावत्वं वह्नौ सत्त्वेऽप्ययोगोलकनिरूपितवृत्त्यभावत्वं नास्तीत्यतो दोषो निवार्यते। तथाहि लक्षणमित्थं साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकसाध्याभावाधिकरणं यत्प्रतियोगितावच्छेदक संबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपित हेतुतावच्छेदकतसंबंधावच्छिन्न वृत्तितावच्छेदकावव्छिन्नप्रतियोगिताक वृत्तित्वाभावो व्याप्तिः। प्रकृतस्थले च साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्न प्रतियोगिताकसाध्याभावधूमाभावाधिकरणं यत्प्रतियोगितावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमात्मकप्रतियोग्यनधिकरणं जलह्रदादिवदयोगोलकमपि तन्निरूपित हेतुतावच्छेदकसंयोगसंबंधावच्छिन्न वृत्तितावच्छेदकावव्छिन्नप्रतियोगिताकवृत्तित्वमेव वह्नावसद्धेताविति कृत्वाऽतिव्याप्तिदोषो निवृत्तं भवति।

तथापि पर्वतो धूमवान् वह्नेः इस असद्धेतु स्थल में अतिव्याप्ति दोष होगा। इस स्थल में साध्यतावच्छेदकसंबंध और हेतुतावच्छेदकसंबंध दोनों ही संयोग है। क्योंकि उक्त लक्षण घटकीभूत अधिकरणनिरूपित यत्किचिद्वृत्तित्व लेना है अथवा यावद्वृत्तित्व लेना है यह नहीं कहा गया है। अत: साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्न प्रतियोगिताकसाध्याभाव धूमभाव का अधिकरण होते हुए प्रतियोगितावच्छेदकसंयोग

संबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमरूपी प्रतियोगि का व्यधिकरण जलह्रदादि होगा, तन्निरूपित हेतुतावच्छेदकसंयोगसंबंध से अवच्छिन्न वृत्तित्व मीनादि में है, और अवृत्तित्व वह्निरूपी असद्धेतु में होने से लक्षण में अतिव्याप्ति दोष हो गया। इसके निवारण केलिये वृत्त्यभावशरीर में वृत्तितावच्छेदकावच्छिन्न अर्थात् वृत्तितात्वावच्छिन्न विशेषण देना चाहिये। तब लक्षण का यह स्वरूप होगा साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदका-वच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न-प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निनिरूपित हेतुतावच्छेदक संबंधावच्छिन्न वृत्तितावच्छेदकावच्छिन्न प्रतियोगिताकवृत्तित्वाभावो व्याप्तिः। अब प्रकृतस्थल में घटाके देखें – उक्त विशेषणों से युक्त वृत्तितात्वावच्छिन्नप्रतियोगिताक-वृत्त्यभाव का अर्थ है यावद्वृत्तित्वाभाव, अतः जलह्रद निरूपित वृत्त्यभाव वह्नि में रहने पर भी अयोगोलक निरूपित वृत्त्यभाव वह्नि में नहीं है। अतः अवृत्तित्व वह्निरूपी असद्धेतु स्थल में न होने से लक्षण में अतिव्याप्ति दोष नहीं रहा।

९. तथापि पुनस्तत्रैवातिव्याप्तिः स्यात्। कथमिति चेत्, एक सत्त्वेऽपि द्वयं नास्तीति न्यायात्। अयं न्यायः पूर्वमेव व्याख्यातं। दोषश्चेत्थं यद्यपि तादृशायोगोलकनिरूपित-वृत्तित्वमेव वह्नौ नत्त्ववृत्तित्वं तथाप्ययोगोलके वह्निः सत्त्वेऽपि तत्र वह्निघटोभयं नास्ति, अत एव तादृशोभयाभावीयप्रतियोगिनि वह्नौ वृत्त्यभावत्वमेवास्ति। ततश्च साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्न प्रतियोगिताकसाध्याभाव धूमाभावाधिकरणं यत्प्रतियोगितावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमात्मकप्रतियोग्यनधिकरणमयोगोलकं तन्निरूपित हेतुतावच्छेदकसंयोगसंबंधावच्छिन्न वृत्तितावच्छेदकावच्छिन्नप्रतियोगिताकवृत्तित्वं वह्नौ सत्त्वेऽप्येकसत्त्वेऽपि द्वयं नास्तीति न्यायेन अयोगोलके वह्निघटोभयाभावमस्तीत्यतः तादृशोभयाभावीय प्रतियोगिनि वह्नावयोगोलकनिरूपितावृत्तित्वमेवेति कृत्वाऽतिव्याप्तिदोषो भवति। तन्निवारणाय वृत्तितात्वेतरधर्मानवच्छिन्नं (वृत्तितावच्छेदकेतरधर्मानवच्छिन्नं) विशेषणं देयं। तस्य कोऽर्थः? वह्नावयोगोलकनिरूपितवृत्तिताऽस्ति तस्यावच्छेदको वह्नित्वं तदितरधर्मो घटत्वं तेनावच्छिन्नं वह्निघटोभयाभावः न त्वनवच्छिन्नं। तथा च निष्कृष्टलक्षणमित्थं स्यात् साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकसाध्याभावाधिकरणं यत् प्रतियोगितावच्छेदक संबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपितहेतुतावच्छेदक

संबंधावच्छिन्न वृत्तितावच्छेदकेतरधर्मानवच्छिन्न वृत्तितावच्छेदकावच्छिन्न प्रतियोगिताक वृत्तित्वाभावो व्याप्तिः। तेन प्रकृतस्थले दोषो न भवति। कथं? साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्न प्रतियोगिताकसाध्याभाव धूमाभावाधिकरणं यत्प्रतियोगितावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमात्मकप्रतियोग्यनधिकरणमयोगोलकं तन्निरूपित हेतुतावच्छेदकसंयोगसंबंधावच्छिन्न वृत्तितावच्छेदकवह्नित्वेतरपटत्वादिधर्मानवच्छिन्न वृत्तितावच्छेदकावच्छिन्न प्रतियोगिताकवृत्तित्वमेव वह्न्यावसद्धेताविति कृत्वाऽतिव्याप्तिदोषो निवृत्तं भवति।

पुनः एक सत्त्वे अपि द्वयं नास्ति न्याय से उसी असद्धेतु स्थल में अतिव्याप्ति दोष होगा। कैसे? साध्यतावच्छेदकसंयोगसंबंधावच्छिन्न साध्यतावच्छेदकधूमत्वेतरपटत्वाद्यनवच्छिन्न साध्यतावच्छेदकधूमत्वावच्छिन्न प्रतियोगिताक साध्याभाव धूमभाव का अधिकरण होते हुए प्रतियोगितावच्छेदकसंयोगसंबंधावच्छिन्न प्रतियोगितावच्छेदकधूमत्वावच्छिन्न धूमरूपी प्रतियोगि का व्यधिकरण अयोगोलक है तन्निरूपित हेतुतावच्छेदकसंयोगसंबंध से अवच्छिन्न वृत्तित्व वह्नि में रहने पर भी वह्निघटोभय में नहीं है, अतः उभय का अवयव वह्निरूपी असद्धेतु में वृत्तित्व न होने से लक्षण में अतिव्याप्ति दोष हो गया। इस दोष को दूर करने के लिये वृत्तितावच्छेदकेतरधर्मानवच्छिन्न विशेषण देना होगा। इसलिये अब निष्कृष्ट लक्षण का यह स्वरूप बनता है साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकेतरधर्मानवच्छिन्न साध्यतावच्छेदकावच्छिन्न प्रतियोगिताक साध्याभावाधिकरणं यत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यनधिकरणं तन्निरूपित हेतुतावच्छेदकसंबंधावच्छिन्न वृत्तितावच्छेदकेतरधर्मानवच्छिन्न वृत्तितावच्छेदकावच्छिन्न (वृत्तितात्त्वावच्छिन्न) प्रतियोगिताक वृत्तित्वाभावो व्याप्तिः। अब अयोगोलक निरूपित वृत्तित्वाभाव से वह्निघटोभयाभाव नहीं ले सकते क्योंकि वह अयोगोलक निरूपित वृत्तित्व जो वह्नि में है उसका अवच्छेदक अर्थात् वृत्तितावच्छेदक वह्नित्व से इतर घटत्व से अवच्छिन्न है, अतः लक्षण घटक वृत्त्यभाव शब्द से तादृशोभयाभाव नहीं ले सकते, अपितु केवल वह्न्यभाव लेना होगा, किन्तु वह संभव नहीं, क्योंकि अयोगोलक में वह्नि है। इसलिये अयोगोलक निरूपित वृत्तित्व ही वह्नि में है, अवृत्तित्व वह्नि में नहीं है। इस प्रकार अतिव्याप्ति दोष दूर होने पर, निष्कृष्ट लक्षण निर्दोष हो गया।

॥ इत्यों शम्॥

| | प्रकाशित पुस्तकों की सूची | |
|---|---|---|
| 1 | शिवपूजापद्धतिप्रकाशः | मुफ्त |
| 2 | पूर्णयोग (योगपंचदशी) | 140 |
| 3 | सर्वदर्शनसारः | 175 |
| 4 | श्रीचक्रपूजापद्धतिप्रकाशः पूर्णिका सहित | 300 |
| 5 | वास्तुपूजापद्धतिप्रकाशः | 120 |
| 6 | शक्तिमहिम्नःस्तोत्रम् | 120 |
| 7 | दुर्गापूजापद्धतिप्रकाशः | 250 |
| 8 | दुर्गाहोमविधिः | 250 |
| 9 | उणादिकोशः | 30 |
| 10 | शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 11 | शिव-शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 12 | Holistic Yoga | 220 |
| 13 | An Advatik View of Kantian Thoughts | 560 |
| 14 | Wisdom of Yoga | Free |
| 16 | लघुसिद्धान्तकौमुदी (टिप्पणसंग्रहः) | 20 |
| 17 | तर्कसंग्रह (टिप्पणसंग्रहः) | 20 |
| 18 | अर्थसंग्रह (टिप्पणसंग्रहः) | 10 |
| 19 | अनुभूतानुष्ठान प्रकाशः | 300 |
| | भागवतपीयूषबिन्दुः | 300 |
| 20 | यतिदण्डैश्वर्यविधानम् (2 खण्डः) | 1000 |

